धर्म्मज्ञः सत्यवादी च कुलीनो लोकसम्मतः।
आहूय परया भक्त्या तेन पूजादि कारयेत्॥
वनस्पतेरगनायेत्येतया पूजनादिकं।
आग्नेय्यां दिशि होमञ्च समिदाज्यतिलैर्भवेत्॥
मन्त्राय शाश्वतो दृष्टा जातावायतुमित्यपि।
तिलहोमो व्याहृतिभिरष्टोत्तरसहस्रकं॥
यदचं वायुमन्त्रेण आज्यहोमः प्रशस्यते।
ग्रहशान्तिश्च कर्त्तव्या स्वगृह्योक्तविधानतः॥
हुत्वा हुत्वा च सम्पातान् पात्रेऽन्यस्मिन्निधापयेत्।
तेन विद्रधिरोगं मे सम्यगाज्यप्रदानतः॥
अग्ने रुत्तरतो भागे यात्रशय्यापनं भवेत्।
भद्रासनोपविष्टस्य अभिषेकञ्च कारयेत्॥
ततः शुक्लाम्बरधरः शुक्लगन्धानुलेपनः।
सौवर्णमाम्रवृक्षन्तं प्रदद्यात् प्राङ्मुखाय तु॥
गन्धपुष्पैः पूजिताय रोगी स्वयमुदङ्मुखः।
आम्र त्वं ब्रह्मणा सृष्टः सर्व्वप्राणिहिताय तु॥
वृक्षाणामादिभूतस्त्वं देवानां प्रीतिवर्द्धनः।
फलचौर्य्येण यत् प्राप्तं वैरूप्यं पूर्व्वजन्मनः।
सौवर्णवृक्षदानेन तुष्टा सर्व्वाश्च देवताः॥
विद्रधीनां शरीरोत्थं वाह्यमभ्यन्तरं तथा।
विनाशयन्तु सकलं स्वास्थ्यं कुर्वन्तु मे सदा॥

दानमन्त्रः।

नक्षत्राणि तथामूलं प्रशस्ते द्रुमरोपणे॥
प्रधानमजलं राम नाभिरामं यदा तदा।
प्रवेशयेवदीवाहान् पुष्करिण्यञ्च कारयेत्॥
संस्कार्यमुद्भिदम्भोयं कूपाः कार्य्याः प्रयत्नतः।
हस्तोमघा तथामैत्रमाद्यं पुष्यं सवासवं॥
उत्तरात्रितयं राम तथापूर्व्वा सफाल्गुनी।
जलाशयसमारम्भे प्रशस्तं वारुणं तथा॥
संपूज्य वरुणं देवं विष्णुं पर्जन्यमेव च।
कल्पयित्वा द्विजान् कामैस्तदारम्भपरोभवेत्॥
अथोद्याने प्रवक्ष्यामि प्रशस्तान् पादपान् द्विज।
अरिष्टा-शोक-पुन्नाग-शिरीषाः-सप्रियङ्गवः॥
पनसाशोककदलीजम्बूलकुचदाडिमाः।
मङ्गल्याः पूर्व्वतोराम रोपणीया गृहेषु वा॥
कृत्वा बहुलमेतेषां रोप्याः सर्व्वे वनान्तरं।
शाल्मलिं कोविदारञ्च वर्जयित्वा बिभीतकं॥
दमन देवदारुञ्च पलाशं पुष्करन्तथा।
न विवर्ज्यस्तथा कश्चिद्दे वोद्याने विजानता॥
तत्रापि बहुला कार्य्या मङ्गल्यानां द्विजोत्तम।
सायं प्रातश्च घर्म्मान्ते शीतकाले दिनान्तरे॥
वर्षाकाले भुवः शोषे सेक्तव्या रोपिता द्रुमाः।
उत्तमं विंशतिर्हस्ता मध्यमा षोड़शान्तरं॥
स्थानात् स्थानान्तरं कार्य्यं हक्षाणां द्वादशान्तरं।
अभ्यासजातास्तरवः संस्पृशन्तः परस्परं।

मांसप्लुतोवसामज्जासेकः कुरुवके हितः।
पूतिमत्स्याहितं पूतिकार्पासफलमेवच ॥
अहिमेदस्य सेकोऽयं पाटलेषु च शस्यते।
शृगालमत्स्यमांसाभ्यां चम्पकेषु च दापयेत् ॥
फले लतानां क्षीरेण रुधिरेण च शस्यते।
कपित्थविल्वयोः सेकं गुडतोयेन कारयेत् ॥
जातीनां मल्लिकायाश्च गन्धतोयं परं-हितं।
तथाकुब्जकजातीनां कूर्म्ममांसम्प्रशस्यते ॥
खर्ज्जूरनारिकेलानां वं-शस्य कदलस्य च।
लवणेन सतोयेन सेको हृद्धिकरः स्मृतः ॥
विड़ङ्गतण्डुलोपेतं मत्स्यमांसं नरोत्तम।
सर्व्वेषामविशेषेण दोहदं परिकल्पयेत् ॥

एवं कृते चारुफलाः सुपुष्पाः
सुगन्धिनोव्याधिविवर्जिताश्च।
भवन्ति नित्यन्तरवः सुरम्या-
श्चिरायुषः स्वादुफलान्विताश्च ॥

देवीपुराणे।

घनृपे सजले स्थाने पुमान् देवेऽथ वा जने।
चारामं रोपयेत्प्राज्ञो विधिदृष्टेन कर्म्मणा ॥
घनूपे, प्रतिस्निग्धे।
सजले अन्याशयसहिते।

मयन्तो माधवी-रथ्या क्रीड़ास्थाने निवेशयेत्।
जाती-नेपालिका-कुन्द-तगरा-गन्धमल्लिका।
शुभाय कथितास्तात व्यत्ययाद्भयदा यतः॥
पूर्व्वेण सुसमारामस्तथाचोत्तरतोऽथवा।
पश्चिमे धनदं सौम्यं वायव्यां कीर्त्तिवर्द्धनं॥
न कुर्य्याद्यस्यनैर्ऋत्ये ये चाग्नेये शुभार्थिनः।
अन्यथा कलहोद्वेगं मृत्युश्चा लभते सती॥
तस्माद्दाक्ष्यायुःशुभदं पुत्रसन्ततिवर्द्धनं।
पश्चिमोत्तरपूर्व्वेण आरामश्चायते कृतं॥
अथवारामजान् दोषान् चामुण्डा शामयेत् क्षतान्।
महाभयं महान्तश्चोपद्रवात्यं यथोदितं॥

महच्छत्यं महत्पीड़ा।

पुष्प पत्र-फलानाञ्च वीजरेणुसमाः समाः।
कर्त्ता देवसभावासं विधौ यात्यविधौ वधः॥

तथा।

एवं यथोदितां भूमिं शुद्धां प्रयत्नमाहितां।
परिच्छिद्य यथादेवं वनमानं शिखिध्वजं॥
सोमस्य नागराजस्य ततःकुर्य्यात्परिग्रहं।
यदोर्जं मन्त्ररहितं गर्भाधानादिवर्जितं॥
यामितं मन्त्रकारादि यदोक्तं मन्त्रवर्जितं।
तस्मात् यागकाराय तथा जायेत वैकृतं॥
गन्धरायेतिमन्त्रेण हैस्यंतु पञ्चमन्त्रविग्।

प्राग्वक्तेन तु राजेन्द्र बीजं भवति शोभनं ॥
अविधौ कूपवाप्यादिखननोत्सरणं च यत् ।
कुर्व्वन्ति सहकारादिरोपणन्तु नराधमाः ।
फलं तेषां लभेत्तेषामिह चान्ते अधोगतिः ॥
येऽशक्ताः शक्तविधिना कुर्व्वन्ति वनरोपणं ।
ते चामत्यपलोकानां महासंशयकारकाः ॥
कूपा-राम-तड़ागादि-प्रपा-वापी-प्रतिश्रयं ।
सर्व्वेशाधिष्ठितं यत्र ह्यनन्तफलदायकं ।
तस्मान् यत्र समारोप्य शिवधाम प्रपद्यते ॥
ये च पापा दुराचाराः वीतच्छेदकारिणः ।
तेऽथ पाचादिनरके पच्यन्ते ब्रह्मणोदिनं ।
यतास्ते जीवमानास्तु ब्रह्मघ्नाःकीर्त्तिता भुवि ॥
तस्मिन् देशे भयं नित्यं राजानो न चिरायुषः ।
न च नन्दत्ययं लोको यत्र वीतच्छेदनं ॥

इत्यारामरोपणम् ।

अथ हक्षप्रतिष्ठा ।

मत्स्यपुराणे ।

ऋषय ऊचुः ।

पादपानां विधिस्तत्र यथाविस्तराहद ।
विधिना केन कर्त्तव्यं पादपोद्यापनं बुधैः ।
ये च लोकाः स्मृतास्तेषां वा नियानं वदस्व नः ॥

सूतउवाच।

पादपानां विधिं वक्ष्ये तथैवोद्यानभूमिषु।
तड़ागविधिवत् सर्व्वमासाद्य जगतीश्वर॥
ऋत्विग्मण्डपसम्भारमाचार्य्यञ्चापि तादृशः।
पूजयेद्ब्राह्मणांस्तद्वद्धेमवस्त्रानुलेपनैः॥
सर्व्वौषध्युदकैः सिक्तान् पिष्टालक्तविभूषितान्।
वृक्षान्माल्यैरलङ्कृत्य वासोभिरभिवेष्टयेत्॥
सूच्या सौवर्णया कार्य्यं सर्व्वेषां कर्णवेधनं।
अञ्जनञ्चापि दातव्यं तद्वद्धेमशलाकया।
फलानि सप्त चाष्टौ वा कालधौतानि कारयेत्॥

कालधौतानि रूप्यमयानि।

प्रत्येकं सर्व्ववृक्षाणां वेद्यान्तानधिवासयेत्।
धूपोऽत्र गुग्गुलः श्रेष्ठस्ताम्रपात्रैरधिष्ठितान्॥
सर्व्वधान्यकृतान् कृत्वा वस्त्रगन्धानुलेपनैः।
कुम्भान् सर्व्वेषु सर्व्वेषु स्थापयित्वा नरेश्वर॥
सहिरण्यानशेषांस्तान् कृत्वा बलिनिवेदनं।
यथावल्लोकपालानामिन्द्रादीनां विधानतः॥
वनस्पतेश्च विद्वद्भिर्होमः कार्य्यो द्विजातिभिः॥
ततः शुक्लाम्बरधरां सौवर्णकृतभूषणां।
सकांस्यदोहां सौवर्णशृङ्गाभ्यामतिशालिनीं।
पयस्विनीं वृक्षमध्यादुत्सृजेद्गामुदङ्मुखीं॥
ततोऽभिषेकमन्त्रेण वाद्यमङ्गलगीतकैः।

ऋग्यजुः साम-मन्त्रैश्च वारुणैरभितस्तदा ।
तैरेव कुम्भैः स्नपनं कुर्य्युर्ब्राह्मणपुङ्गवाः ॥
स्नातः शुक्लाम्बरधरो यजमानः प्रपूजयेत् ।
गोभिर्व्विभवतः सर्व्वानृत्विजः सुसमाहितः ॥
हेमसूत्रैः सकटकैरङ्गुलीयैः पवित्रकैः ।
वासोभिः शयनैश्चैव तथोपस्करपादुकैः ॥
क्षीराभिषेचनं दद्युर्य्यावद्दिनचतुष्टयं ।
होमश्च सर्पिषा कार्य्यो यवकृष्णतिलैस्तथा ॥
पलाशसमिधः शस्तायतुर्थेऽह्नि तथोत्सवः ।
दक्षिणा च पुनस्तद्वद्देया तत्रापि शक्तितः ॥
यद्यदिष्टतमं किञ्चित्तत्तद्दद्यादमत्सरः ।
आचार्य्ये द्विगुणं दत्त्वा प्रणिपत्य विसर्जयेत् ॥
अनेन विधिना यस्तु कुर्य्याद्वृक्षोत्सवं वृक्षैः ।
सर्व्वान् कामानवाप्नोति फलञ्चानन्त्यमश्नुते ॥
यश्चैकमपि राजेन्द्र वृक्षं संस्थापयेन्नरः ।
सोऽपि स्वर्गे वसेद्राजन् यावदिन्द्रायुतत्रयं ॥
भूतान् भव्यांश्च मनुजांस्तारयेद्द्रुमसम्मितः ।
परमां सिद्धिमाप्नोति पुनरावृत्तिदुर्लभां ॥

इति वृक्षप्रतिष्ठाविधिः ।

अथ तडागदानविधिः ।

मत्स्यपुराणे ।

दशकूपसमा वापी दशवापीसमो द्रुमः
दशद्रुमसमः पुत्रो दशपुत्रसमो द्रुमः ॥

नन्दिपुराणे ।

तरुपुत्रं तु यः कुर्य्याद्विधिवद्वह्निसन्निधौ ।
स महापातकैर्मुक्तः समुद्धृत्य कुलत्रयं ।
नरकेभ्यो नरोयाति प्रजापतिपुरं शुभं ॥

स्कन्दपुराणे ।

इत्येवं रुद्रमहिषी भूमीरुहसुतस्तव ।
श्रुत्वा पतिं विलोक्येयमिदमाह पतिव्रता ॥
भगवन् केन विधिना विधीनां सारसागर ।
पुत्रप्रतिकृतिर्वृक्षः क्रियते चन्द्रभूषण ॥
सलीलामिति सर्व्वज्ञः पृच्छन्तीं विधियुक्त
महादेवो महादेवीमिदं वचन मब्रवीत् ॥
देवि नागेन्द्रनासोरु नागेन्द्रगतिगामिनि ।
शृणुष्व येन विधिना स्थाप्यतेऽवनिजः सुतः ॥

अवनिजोत्सवः ।

स्वपुत्रार्थं भूमिरुहं ग्रहीष्यामीति माव्यसौ ।
सोपवासा भवेन्नारी शुचिवस्त्रा शुचिव्रता ॥
ततश्चैव सहस्रांशावस्ताद्रिङ्गते रवौ ।
उदिते विमले चापि तथारविन्दसन्निभे ॥
विप्रानामन्त्रयेद्दान्तो भावनात् वेदवादिनः ।